## ॥ श्री राघवेंद्र स्तोत्रम् ॥

श्री पूर्णबोध गुरुतीर्थ पयोब्धिपारा
कामारिमाक्ष विषमाक्ष शिरस्पृशंती ।
पूर्वोत्तराऽमित तरंग चरत्सुहंसा
देवालि सेवित परांघ्रिपयोजलग्ना ॥ १ ॥

जीवेश भेद गुणपूर्ति जगत्सुसत्व
नीचोच्चभाव मुखनक्र गणैस्समेता ।
दुर्वाद्यजापतिगिलैर्गुरु राघवेंद्र
वाग्देवतासरिदमुं विमलीकरोतु ॥ २ ॥

श्री राघवेंद्रस्सकलप्रदाता स्वपादकंजद्वय भक्तिमद्भ्यः ।
अघाद्रिसंभेदन दृष्टिवज्रः क्षमासुरेंद्रोऽवतु मां सदायं ॥ ३ ॥

श्री राघवेंद्रो हरिपादकंज नीषेवणाल्लब्ध समस्त संपत् ।
देवस्वभावो दिविजद्रुमोऽय मिष्टप्रदोमे सततं स भूयात् ॥ ४ ॥

भव्यस्वरूपो भवदुःखतूल संघाग्नि चर्यःस्सुखधैर्यशाली ।
समस्त दुष्टग्रहनिग्रहेशो दुरत्ययोपप्लवसिंधुसेतुः ॥ ५ ॥

निरस्तदोषो निरवद्यवेषः प्रत्यर्थिमूकत्व निदानभाषः ।
विद्वत्परिज्ञेय महाविशेषः वाग्वैखरी निर्जित भव्यशेषः ॥ ६ ॥

संतान संपत्परिशुद्ध भक्ति विज्ञानवाग्दे हसुपाटवादीन् ।
दत्वाशरीरोऽत्थ समस्तदोषान् हत्वा स नोऽव्याद्गुरु राघवेंद्रः ॥ ७ ॥

यत्पादोदकसंचयः सुरनदी मुख्यापगासाधिताऽ
संख्यानुत्तम पुण्यसंघ विलसत्प्रख्यात पुण्यावहः ।
दुस्तापत्रय नाशनोभुवि महावंध्या सुपुत्रप्रदो
व्यंगस्वंग समृद्धिदो ग्रहमहापापापहस्तंश्रये ॥ ८ ॥

यत्पादकंजरजसा परिभूषितांगा
यत्पादपद्म मधुपायित मानसा ये ।
यत्पादपद्म परिकीर्तन जीर्णवाचः
तद्दर्शनं दुरितकानन दावभूतं ॥ ९ ॥

सर्वतंत्र स्वतंत्रोसौ श्रीमध्वमतवर्धनः ।
विजयींद्र कराब्जोत्थ सुधींद्र वरपुत्रकः ॥ १० ॥

श्री राघवेंद्रो यतिराट् गुरुर्मे स्याद्भयापः ।
ज्ञानभक्ति सुपुत्रायुर्यशः श्री पुण्यवर्धनः ॥ ११ ॥

प्रतिवादि जयस्वांत भेदचिह्नादरो गुरुः ।
सर्वविद्या प्रवीणान्यो राघवेंद्रान्नविद्यते ॥ १२ ॥

अपरोक्षीकृत श्रीशः समुपेक्षितभावजः ।
अपेक्षित प्रदातान्यो राघवेंद्रान्न विद्यते ॥ १३ ॥

दयादाक्षिण्य वैराग्य वाक्पाटव मुखांकितः ।
शापानुग्रहशक्तोऽन्यो राघवेंद्रान्न विद्यते ॥ १४ ॥

अज्ञान विस्मृति भ्रांति संशयापस्मृतिक्षयाः ।
तंद्राकंपवचः कौंठ्यमुखाये चेंद्रियोद्भवाः ।
दोषाश्ते नाशमायांति राघवेंद्र प्रसादतः ॥ १५ ॥

ओं श्री राघवेंद्राय नमः इत्यष्टाक्षर मंत्रतः ।
जपिताद्भावितानित्यं इष्टार्थास्स्युर्नसंशः ॥ १६ ॥

हंतु नः कायजान् दोषान् आत्मात्मीय समुद्भवान् ।
सर्वानपि पुमर्थांश्च ददातु गुरुरात्मवित् ॥ १७ ॥

इति कालत्रयेनित्यं प्रार्थनांयः करोतिसः ।
इहामुत्राप्त सर्वेष्टो मोदते नात्र संशयः ॥ १८ ॥

अगम्य महिमालोके राघवेंद्रो महायशाः ।
श्री मध्वमत दुग्धाब्धि चंद्रोवतु सदाऽनघः ॥ १९ ॥

सर्वयात्रा फलावाप्त्यै यथाशक्ति प्रदक्षिणं ।
करोमि तवसिद्धस्य वृंदावनगतं जलं
शिरसा धारयाम्यद्य सर्वतीर्थ फलाप्तये ॥ २० ॥

सर्वाभीष्टार्थ सिद्ध्यर्थं नमस्कारं करोम्यहं ।
तवसंकीर्तनं वेदशास्त्रार्थ ज्ञान सिद्धये ॥ २१ ॥

संसारेऽक्षयसागरे प्रकृतितोऽगाधे सदादुस्तरे
सर्वावद्य जलग्रहैरनुपमैः कामादिभंगाकुले ।
नानाविभ्रमदुर्भ्रमेऽमितभयस्तोमादिघेनोत्कटे ।
दुःखोत्कृष्ट विषेसमुद्धर गुरोमामग्नरूपं सदा ॥ २२ ॥

राघवेंद्र गुरुस्तोत्रं यः पठेद्भक्तिपूर्वकं ।
तस्य कुष्टादि रोगाणां निवृत्तिस्वरया भवेत् ॥ २३ ॥

अंधोपि दिव्य दृष्टिस्स्यादेडमूकोपि वाक्पतिः ।
पूर्णायुः पूर्णसंपत्तिः स्तोत्रस्यास्य जपाद्भवेत् ॥ २४ ॥

यःपिबेज्जलमेतेन स्तोत्रेणैवाभिमंत्रितं ।
तस्य कुक्षिगता दोषाः सर्वेनश्यंति तत् क्षणात् ॥ २५ ॥

यदवृंदावन मासाद्य पंगुः खंजोपि वा जनः ।
स्तोत्रेणानेन यः कुयात् प्रदक्षिण नमस्कृती
सं जंघालोभवेदेव गुरुराज प्रसादतः ॥ २६ ॥

सोमसूर्योपरागे च पुष्यार्कादि समागमे ।
योनुत्तम मिदं स्तोत्रं अष्टोत्तर शतंजपेत्
भूतप्रेत पिशाचादि पीडा तस्य न जायते ॥ २७ ॥

एतत् स्तोत्रं समुच्चार्य गुरोर्बृंदावनांतिके ।
दीपसंयोजनात् ज्ञानं पुत्रलाभोभवेद्ध्रुवं ॥ २८ ॥

परवादिजयोदिव्य ज्ञानभक्त्यादिवर्धनं ।
सर्वाभीष्टप्रवृद्धिस्स्यान्नात्रकार्या विचारणा ॥ २९ ॥

राजचोर महाव्याघ्र सर्पनक्रादिपीडनं ।
न जायतेऽस्य स्तोत्रस्य प्रभावान्नात्र संशयः ॥ ३० ॥

यो भक्त्या गुरुराघवेंद्र चरणद्वंद्वं स्मरन्यः पठेत् ।
स्तोत्रं दिव्यमिदं सदा न हि भवेत् तस्याऽसुखं किंचन ॥ ३१ ॥

किंत्विष्टार्थसमृद्धिरेव कमलानाथ प्रसादोदयात् ।
कीर्तिर्दिग्विदिता विभूतिरतुला साक्षीहयास्योऽत्रहि ॥ ३२ ॥

इति श्री राघवेंद्रार्य गुरुराज प्रसादतः ।
कृतं स्तोत्रमिदं पुण्यं श्रीमद्भिरप्पणाभिदैः ॥ ३३ ॥

पूज्याय राघवेंद्राय सत्यधर्म रताय च ।
भजतां कल्पवृक्षाय नमतां कामधेनवे ॥ ३४ ॥

॥ इति श्री अप्पणाचायकृत श्री राघवेंद्र स्तोत्रं संपूर्णं ॥